# मरुत्संदेशम्

भारत देशस्य दक्षिणसमुद्रात्, आरभ्य कन्याकुमार्यन्तं स्पृष्ट्वा
उत्तर दिशां गच्छन्तं वायुमुद्दिश्य, आंध्रप्रदेशे विरह
युवकस्य कस्यचित् प्रसंगोऽस्मिन् वस्तु ।


प्रणेता

पु. शरभाचार्यः

विजयवाडा (आंध्र प्रदेश)



**Price : Rs. 4-50**

# मरुत्संदेशम्

* संस्कृत नवीनकाव्यम्
* १९.६३ वत्सरपर्यंत
  नवभारत वर्णनात्मकम्
* हिंदी, संस्कृत लघुटीकासहितम्

कविता गणितावधान धुर्येण
पुलिवर्ति शरभाचार्येण रचितम्

## कृतिश्री समर्पणम्

यस्तत्वाब्धेः कलशजमुनि र्योजगज्ज्योति रद्रौ,
योराष्ट्रेंद्र स्सकलजन हृद्राष्ट्रपो यो बुधेन्द्रः ।
यश्चार्षश्रीविभव भरितो यस्यकीर्तिर्दिगीशां
सौधाळीना मुपरि कुरुते शाश्वतीं स्वच्छचर्चाम् ॥

राधाकृष्ण महानाम्ने तस्मै श्री राजयोगिने ।
विश्वप्रम्णे कळाधाम्ने कृतिरेषा समर्पिता ॥

## अभिनदनाशीः

अवधानशिरोमणिः, विद्यावारिधिः, महामहोपाध्यायः, कळाप्रपूर्ण
काशी कृष्णाचार्यः, डि. लिट्,
आंध्रप्रदेश प्रमुखास्थानकविः, गुंटूरु ।

श्रीमान्, धीरशिरोमणि, गुण खनि, स्सत्काव्यकाराग्रणी,
वग्मी, प्रौढवधानकृच्च, शंभाचार्याह्वयः, प्रश्रितः ।
राधाकृष्ण विपश्चिदङ्कित "मरुत्सन्देश" काव्यश्रिया
प्रामोत्वारविवद्रतार ममलां, विश्वप्रसिद्धां, प्रथाम् ॥

## तृतीयमुद्रण विषये

नमः पूर्वकविभ्यः, तत्वानंद गुरुपादायच।

काव्यमिदं मरुत्सन्देशनाम, रचितं मया स्वतंत्रमेवास्ति। प्रथम मुद्रणं आंध्रप्रभुत्वस्य आर्थिकसाहाय्येन निर्वर्तितम्। द्वितीयं, केन्द्रीय विद्यामंत्रित्वशाखा संस्कृतविभागस्य आर्थिकसाहाय्येन च।

एतत् तृतीय मुद्रणं हिंदीकवीनांच विशेषै रितर सन्निवेशैश्च विस्तृतम्। हिंदी टीका, हिंदीभाषा विपश्चिद्भिः श्रीयुत परब्रह्मशास्त्रि, मल्लिकार्जुन, शेषाद्रिनायकैश्च विरचिता येषां साहाय्य मधिकृत्य कृतज्ञतावंदनानि समर्पयामि।

कृतिरेषा डा॥ सर्वपल्लि राधाकृष्णमहनीयाय समंकिता।

कथासंग्रह एवं वर्तते। १९६२ संवत्सर पश्चाद्भागे आंध्र प्रदेशस्थित कर्नूलु पुरात् एक युवकः पत्नी युक्तः काश्मीरान् विनोदार्थं गत्वा, चैना सैनिकास्कंधक ल्लोले, सता हित्वा स्व पुरं विद्रुतवान्। प्रभुत्वनिवेदिकासु, तस्या इतिवृत्तं न प्रकटितमिति चिंतयित्वा, युद्धविरमणस्य पश्चादपि; स्व सतीं मन्वेष्टुं संदेष्टुंच, दक्षिण दिशाया उत्तराशां गच्छन्तं समीरमुद्दिश्य अभ्यर्थनं चक्रे। एतत्व्याजेन मार्गस्थ नानानगर प्रगति सन्निवेशा अधुनातना अभिवर्णिताश्च।

'नीफा' रणरंगे अच्युतरायस्य कस्यचित् वीरभटस्य चैना चमू हनन पौरुषं अभिवर्णितम्। अन्ते, विज्ञापक विरह युवकः, स्वपत्नी पुनस्समागमन सूचनीं लेखां प्राप्य अवाप्नोत् प्रमोदम्।

काव्यविषये अभिप्रायान् दत्तवतां पंडितानां कृतज्ञोऽहम्। गांधेय युगस्य भारतदेशचित्रणं कर्तुकामोऽहं विश्वकर्मगः कृपया एतत् कृति रचनं समाप्तवान्

संस्मराम्यादौ, श्रुतिशिल्प कर्मसंविदौ शेषमांबा नागभूषण पूज्यपितरौ, दर्शितसुरेश्वरीं नन्दनसुमनद्धकबरीं सुन्दरीं मे हृदयेश्वरींच।

10-5-73 पु० शरभाचार्यः

शिरोमणि, आंध्रविशारद, ब्राह्मीभूषणबिरुदांचित
श्रीमान् कप्पगन्तुल लक्ष्मणशास्त्री
Deputy Director of Oriental Studies
Department of Higher Education
Andhra Pradesh

श्रीमद्भिर्विद्वद्वतंसैः शरभाचार्यमहोदयै विरचितः मरुसन्देशम्, मया आमूलाग्रं अवलोकितः अभिनंदितश्च श्रीमतः आचार्यमहोदयस्य नाऽयं प्रथमप्रयत्नः काव्य निर्माणे। इतः पूर्वमेव कवि नानेन नैके संस्कृतग्रन्था रचिताः। अस्य कवे स्सुमधुरां काव्यानिर्माणशैलीं बहुधाऽहं मन्वमन्यम्।

संस्कृतकाव्यनिर्माणस्य अद्यतने काले अतिविरळः प्रयत्नः क्रियते। अनेन आचार्यमहोदयेन न केवल मेकदा अपितु द्वित्रवारं काव्यनिर्माणप्रयत्न स्साधितः बहुभि र्विद्वद्भि रनुमोदितश्च, इदं मरुत्सन्देशरूपं काव्य मपि पूर्वनिर्वितकृतिवत्, जनप्रीतिं साध्नोत्विति हृदयपूर्वकं आशास्महे।

क॥ लक्ष्मणशास्त्री

# प्ररोचना

रामायणमहाकाव्यस्थितं हनुमत्संदेशं मनसि निधाय कालिदासेन कविकुलगुरुणा मेघसंदेशकाव्यं विरचितमिति विदुषा-मभिप्रायः । मेघसंदेशावतरणादारभ्य, हंस सन्देशादिकानि बहूनि सन्देशकाव्यानि प्रचलितानि । इदानीमान्ध्रदेशवासिना श्रीशरभाचार्येण मरुत्संदेशकाव्यनिर्माणेन समलंकृता संस्कृतभारती । आचार्योऽय मान्ध्रांग्लगीर्वाणभाषासु प्रसिद्धतरः कवयिता, संस्कृतान्ध्रभाषयोर वधानी च महाकविबिरुदेन सम्मानितश्च ।

कालिदासस्य मेघसंन्देशः, पूर्वमेघ, उत्तरमेघ-इति भागद्वया त्मकशताधिकपद्यपरिमितः । मरुत्संन्देशोऽयं पंचभागात्मकः किंचि दूनशतत्रितयपद्यात्मकः । जगत्पितोर्गायत्रीविश्वकर्मणोः पंचशीर्षैरुपेत त्वात् , तद्भक्तवरेण्येण कविनाप्यनेन तत्तत्त्वसूचकमध्यायपंचकम स्मिन् काव्ये समुपनिबद्धमिति मे मतिः । अत्र संयोजितानि मन्दा क्रांतभिन्नानि छन्दांस्यपि मेघदूताद्वैलक्षण्यं संपादयंत्यस्य काव्यस्य मेघे ताव द्विप्रकारः श्रृंगाररसः प्रधानतया वर्णितः प्रतिभाति । अत्र तु, वीर शान्तावपि यथायोगं समुपवर्णितौ ।

तृतीयभागे कृतं अच्युतरायस्य चैनासैन्यस्य च " नीफा " प्रान्तयुद्धाभिवर्णनं वीरप्रधानं भारतजातिपौरुषप्रतापयो र्मणिमुकुरप्रायं प्रतिभाति । ब्रह्मयोगि, गांधीमहात्म, विनोबाऋषिप्रभृतीनां प्रशंसा शान्तरसमभिव्यंजयति । श्रृङ्गाररसस्यतूदाहरणानि बहूनि संदृश्यन्ते । तिद्वीयभागे दिल्लीवर्णनावसरे कृतं कीरसंभाषणादिकमित्यादि सर्वा सहृदयानावर्जयत्येव ।

काव्येऽस्मिन् कन्याकुमार्यग्रात् हिमाचलपर्यंतं यानि सुप्रसिद्धानि क्षेत्रपुरग्रामादीनि वर्तन्ते, तानि सुन्दरेण नव्यकवितामार्गेण कालिदासदिशा समभिवर्णितानि "दिङ्नागानां पथि परिहरन् स्थूलहस्तावलेपान्" इति कालिदासेन मेघे समुपन्यस्तम्। अनयैव दिशा विशालहृदयः कविरयमत्र नेकेषां नेहूप्रभृतिमहापुरुषाणां, कवीनां, कळाकराणां नगराणाभिवर्णनं यथावकाशं कृत्वा साधु देशचरित्रसंग्रहमपि प्रादर्शयत् ।

कुल मत दूषनिमूलनाय, मानवकत्वसिद्ध्यै कृतश्रमाणां गान्धीप्रभृतिमहाशयानां प्रशंसात्र कृत्वा, आधुनिकमानवसंस्कृत्यै दोहदं करोति । किं बहुना ! श्रीशरभाचार्यकविः काव्येऽस्मिन् देशमातृभक्तिं, वीरपूजाभिरतिं नव्यमानवसंतरणसंदेशं च मानवेषु प्रकाशयितुं प्रवृत्तो न भारतीयानामेव केवलं, संस्कृतप्रणयिनां सर्वप्रपंचपौराणामपि रुचिरतरं मृष्टमातिथ्यं संपादितवान् । अस्मदीयानां दृष्टिमनुसृत्य बहुगुणभरितमिदं काव्यम् "विश्वमानवसंदेशः" इव विभातीत्यत्र न कश्चित्संदेहः ।

अत्र स्थितानां बहूनाम् रमणीयानाम् काव्यगुणानामनुभवरसिका स्सहृदया एव प्रमाणमिति विरमाम्यतिविस्तरात् ॥

सकलकळाधुरीणः दर्शनाचार्यः
**श्री कोङ्करु वीरराघवाचार्यः**

———

# मरुत्सन्देशः

## प्रथमभागः

अब्रूतैवं तरुणतिलकः कश्चि दान्ध्रप्रदेशे
'कर्नूल्' पुर्यां, गृहवनलता केळिलोलं समीरम् ।
तापाचप्त्वा विधिनियतया स्वप्रियाविप्रयुक्त्या ;
चन्द्रेऽतन्द्रे विकिरति वियन्मण्डले सान्द्रचान्द्रीम् ॥ 1

ईडेऽहं त्वां मलय कुधरा दागतं स्वागतोक्त्या,
श्रीगन्धक्ष्मारुह विनिकरैः कीर्ण रेण्वङ्ग लेपैः ।
गोपीवामा सहित हरिव द्दाक्षिणेऽक्षीणपुण्ये,
स्नातं पूतं जलनिधिजले स्निग्धमुग्धाङ्गनाभिः ॥ 2

नूनं त्वं सञ्चरण कुशलश्चादितः, पञ्चभूत-
व्राते मुख्य स्सकल जन सम्प्रार्थनीयश्च नित्यम् ।
हंसात्कीरा दसि लघुतरश्श्लाघ्यमेघाच्च, तस्मात्
कांक्षामि त्वां प्रियहनुमतस्तात! सन्देशकृत्यै ॥ 3

किञ्चिद्वृत्तं शृणु मम, शुभं ते भवे दुत्तरस्या-
माशायां तद्वनगिरिसरश्शोभनत्वं प्रशंसन् ।
कान्तायुक्तो 'ळढ' मुपगतो यालिकोऽतीतवर्षे,
ह्यन्तापश्यं 'चिनि' रिपुचमू धूर्तचर्यां दुरन्ताम् ॥ 4

हेतोस्तस्याः क्षुभितनगरे कान्दिशीकप्रजायां
मग्नः 'काश्मीर्' पुर परिसरं, यातु मायत्त मग्रे ।
कञ्चित् सेना नियत शकटं प्राणभीत्या प्रविष्टो,
दारान् हित्वा, विपदि पतितस्तत्कथां भो न जाने ॥ 5

अतिकान्त स्तिति मनुभवन् प्राप्त कान्ता वियोगात्
प्रक्लान्तस्सन् विरह शिखिनः पञ्जरे दह्यमानः
वासस्तस्याः क, किमु चरितं, साध्यभद्रा, नभद्रा,
नाहं वेद्मि, प्रबल कृपया त्वं कुरुष्वोपकारम् ॥ 6

नीरूपोऽपि त्वमसि गतिमान्, सत्ववान्, सर्वलोक
प्राणप्राणो ह्यखिलचरितो, भौवनब्रह्म पत्न्याः ।
पृथ्वीदेव्याः परम सुखकृच्चञ्चल चामराभः ;
स्पर्शोनैव प्रमदरसदस्सर्वदा निर्विरामः ॥ 7

कन्याकुमार्यग्रम् —

अग्रेऽग्रे त्वं, भरतकुतले, दाक्षिणाशाञ्चलस्थे ।
'कन्यादेव्याः' पदतल गतां, कम्र कर्पूर दीपात् ।
प्रोत्थां धूपश्रिय मनुभवं 'स्ताम्रपर्णीं' च तीर्त्वा,
चायातस्त्वं खलु, भगवती दर्शना दाद्य धन्यः ॥ 8

तत्रापश्यो दिवस पुरुषं, यस्य पूर्वापराशा
गण्ड स्थाने, नवनव विधौ, यामिनी कामिनीयम् ।
वारं वारं प्रणय विवशा चुम्बने चाऽऽदधाना
सन्ध्यारागं त्वधर मधुना सक्त ताम्बूल रागम् ॥ 9

नूत्रायातं त्वतिथि तिलकं, त्वां प्रियं केरळस्थाः,
शाखाहस्तोद्धृत शुभफलैः पूर्णकुम्भै रकुर्वन् ।
सम्मानं ते प्रथम मिति, ताः प्रोन्नता नारिकेळ्यो,
मन्येऽहं, भोः, परमऋषिभि श्शसिते सम्प्रदाये ॥ 10

कावेरीप्रान्तः —

ऊर्ध्वं तत्र प्रसरति सरिन्मन्द मन्दं मनोज्ञा,
यस्याः पाथः प्रकृति रचितं दर्पणं नीडजानां ।
कूले यस्या लकुच बदरी दाडिमाम्र द्रुमौघे
प्रेङ्खत्ताना द्विजकुल वरै स्त्वं किलाद: फलान्नम् ! ॥ 11

श्च श्शार्वर्या स्सुरतमृदित स्वाङ्क स्वेदगन्धान्
मार्ष्टुं, गण्ड स्थल मकरिका पत्रिकाळीश्च हर्तुम् ।
नार्य, श्शय्या मलिनवसनं. धावितुं, तां, नदीं, ताः
प्रातर्याता, स्तदनुसरणा त्किं त्वयात्तं फलं भोः ! ॥ 12

पृच्छामि त्वां किमु रसहृदा तत्क्षणेऽमन्यथा स्त्वं
कान्ता, क्लान्ता प्यनुभव विदे रोचते पूर्ववद्धि ।
नूनं लोके नवगुड शिला लेह्यरूपा, प्रशस्ता
दीर्णाऽदीर्णा त्यजति मधु नो, न प्रियं वर्तते नो ॥ 13

पुम्भ्यो बाधा मुपशमयितुं. तत्र. नापुंसकाङ्क
स्रोताम्भस्सु, व्यथित वनिताः, प्राविशन्नाभिदघ्नम् ।
यासां स्पर्शात् स्तिमित सलिलं, द्राक्तरंगोहि, भूत्वा
पर्यष्वंक्त प्रियतममुरः पुंहृदा रागमाप्त्वा ;
[स्त्री संसर्गात्, किमु न चलितं किं न मत्तं प्रपञ्चे ! । ] 14

तत्कावेर्या स्सुभग सलिले मज्जदब्जाननानां
अञ्चन्मुष्टिस्तनकलश वद्धाहुदण्डा, स्समोत्थाः ।
केयूरेभ्यः, कनकमणिमत्कङ्कणेभ्यः, क्वणन्तः,
प्रायो वीणा कृतिगण इव. त्यागराजो, व्यराजन् ॥ 15

माळ्वाधीशा, स्स्थपति कुलजा स्स्वीयमात्त सुशिल्पं,
ब्राह्मं, क्षात्रं प्रदिदिशु रमी शैवकाञ्चीनगर्याम् ।
वेत्तिस्स्माग्रे तदुरुचरितं धर्मपाला' त्मजानां,
श्रीकामाक्षी पदकमलयो स्संचर द्भृम्भरागाम् ॥ 16

मद्रास् नगरम् —

"हा ! कस्मिंश्चि न्नगरनिकरे नायकं मन्यमाना,
द्रव्यस्थेम्नो ह्यभिगतपदाः पत्रिकास्तोत्रढकाः ।
सेवावेषा, मधुररसना स्सन्त्यतिस्वार्थवृत्ता,
स्ते गायन्तो मशकहतका , रक्तपा, नेतरेच " ॥ 17

"एतत् भूम्यां चलति बहुळं पीडनं; पालनं नो,
नृणा मित्थं; परधनरतो मण्डलीकोऽधिकारी ।
नीत्या दूरो विगतसुखिनां वर्तते, सोऽधिकारिः;
श्रेयोराज्यं प्रभवति कथं रक्षका भक्षकाश्चेत् ! ॥ 18

"सिञ्चन्ती सा भरत जननी नैक राजन्य सिंह
द्वाराण्येवं नयन गळितै रश्रुपूरैरिदानीम् ।
'भिक्षां देही'त्यथ विलपति स्वान्नपानायुधेभ्यः,
श्मश्रूदग्रे निजतनुभुवां पौरुषे, हि, प्रणष्टे " ॥ 19

"विद्यारोग्य द्रविण वसनाहारशालाश्च देशे,
नासन् सम्यक्" किमिति निशित प्रज्ञयाद्य प्रभुत्वे ।
यो 'राजाजी' स्वमुख धनुषः प्रश्न मुग्रं प्रयुंक्ते,
ब्रह्मास्त्रं; तं, न किमु गतवान् त्वं पुरोऽध्वस्वतन्त्रः ? ॥ 20

मैसूरु राष्ट्रम् —

नापश्यो भो! उपरि, पवन! त्वं स्वसंकेत पूर्णां
'सी. वी. रामन्' प्रथितविदुषा निर्मितां शास्त्रशालाम् ।
तां, ' हेच्. एल्. ए. '' परिकरकळा कर्मशालां च नव्यां ?
ये, द्वे, 'बेंग्लूर्' नगर वनिता रत्नमाले प्रशस्ते ॥ 21

श्रीगन्धाग प्रकर जनितं सौरभं बाढमूढ्वा
मन्दारद्रु प्रसव मरुणं दीप राजं च कृत्वा ।
'मैसूर्' खेट्टा द्विपगळगता घण्टिका वेपयित्वा
चामुण्डार्चा विविध विधिषु त्वं स्थितश्चेति मन्ये ॥ 22

अग्रे "हंप्या" स्त्वयि विहरति, प्रायशो, भावितोऽभूत्
प्रागन्ध्रक्ष्मा प्रथित विभव स्त द्विरूपाक्ष पादे ।
पाद्यप्राया स्खलसगमना स्वच्छ पम्पाप्सु, लीनो;
वासी ळेखिन्यसि विरचितः 'कृष्णराय'स्य काले ॥ 23

दक्षिणान्ध्रः —

प्राक्छास्त्राणां विषम नियमै मन्त्र तन्त्रप्रकाण्डैः।
वृत्ते वृत्ते स्समधिक पृथग्भावनां कल्पयित्वा।
यत्सिद्धान्त स्सकल जनता नैकतां तां पुपोष।
तस्य च्छेत्ता, किमु न विनुतो 'मार्गसाहाय्य' नामा? ॥ 24

योऽश्रान्तान्त स्सुनिशितदृशा, क्षेत्र बीजाङ्ककीर्णा,
नैकाः क्लिष्टा, गहनरचना युक्ति युक्तास्समस्याः।
दृष्ट्वा तत्तत्क्षण विघटित ग्रन्थि बन्धाश्च कुर्वन्
साक्षीभूतो मुहु रभिनवो 'भास्करो' ह्यांध्यवृत्तः ॥ 25

"सञ्जीवाख्यं" प्रचुरयशसं विश्वकर्मेश भक्तं
आस्थानेषु त्रुटित विविध प्रश्नवल्ली ततिं, तम्।
नाना राष्ट्रे ष्वखिल विषये ष्वेकमेवाऽद्वितीयं,
'सांख्याचार्यं' मनसि! "गणितब्रह्म" पट्टं त्वतनेसीः! ॥ 26

नव्यर्षीणां स्त्रजि वरमणिं "कन्दि मल्लय्य" पश्यां
मन्दारागं सकल जनता मोक्षयात्रा सहायम्।
"वीरब्रह्म" स्थपति तिलकं वेदवेदान्त विद्या
साराकारं विविध मत वाग्सामरस्यं सृजन्तम् ॥ 27

ब्रह्मश्शेलीकृत निज तलं स्वार्जित प्राक्तनार्षं
श्रीसम्पन्नं, नवशक करं, सर्वयोगाधिरूढम् ।
शिल्पे तत्वे कृत मति- मिमं, त्वस्तवीरान्त राक्षणा
त्रैकालीनान् विविध विषयान् द्दष्टवन्तं समीर ! ॥ 28

आरब्धनां त्रिविधकरणै रात्म साहित्य शिल्प
श्रीयज्ञानां मवभृथपय स्स्रोतसि स्नान धन्यः ।
स्वायुर्वेद्यां सुकृति सुकृतां, चार्ष दीक्षानुपूतः
तच्चारित्रं त्वलिख दनघो "राघवो"ऽमोघयोगः ॥ 29

कर्नूलुपुरम् —

इन्द्री वीची समुपचरणा द्धर्षिता· या· स्रवन्ती
शीर्षाग्रेभ्यस्तट विटपिनां प्रस्खलद्भिः स्सुमैश्च ।
स्वायं वक्ष स्सुकलिभिरलंकुर्वती, तुङ्गभद्रा
भातीक्षस्व प्रमुदितहृदा तां, पुरे सञ्चरिष्णुः ॥ 3 ।

"कोण्डा रेड्डि" प्रथित विबुधो वप्रभागात् सुराणां
हूतिं चक्रे, प्रिय निज करेणोन्नतेन, ध्वजेन, ।
प्राय स्तस्मा द्विबुध निकरा, स्स्वांशरूपा न्नगर्यां
बभ्रु र्नानाविषय विदुष, स्साहिती शिल्प विज्ञान् ॥ 3L

श्रीशैलादि प्रथित बहुळक्षेत्र चित्राम्बराढ्या,
'दैवं दिन्ना' अनुपम कळास्थान रत्नोत्तरीया ।
अस्मद्राष्ट्रप्रकट जनन प्राभवेन प्रदीप्ता,
कान्या धन्या भवति, सदृशी पूर्त्रिलिंगे ऽवमुष्याः? ॥ 32

गाधेयाज्ञाचरण निपुणं रामचन्द्रं स्तुवानो
गान्धेयाज्ञाचरण निपुणः 'पोट्टिरामो'ऽभिरामः ।
स्वप्राणाज्यं परमफलदं स्वात्मयज्ञे समस्तं
स्वाहाकुर्वन् सकल भुवनं विस्मयेऽमज्जयत्सः ॥ 33

# मरुत्सन्देशः

## द्वितीयभागः

वायो, तिष्ठ! स्थिमितमनसा, स्वल्पकालं त्वमग्रे
'गड्डाला'यां ह्यतिथिविधिना, याम्यनेनेक्पुरा, तत् ।
'पोकुर्काशीपति' पदयुगं ह्यर्थिकाव्यं गृहीत्वा;
तस्याशीर्भिः प्रमुदितमना विद्वदर्चा प्रवृत्त्या ॥ 34

या धाराया मनट दमका ताहशीं कीर्तिरेखां
वीक्ष्यात्रस्था मुपमित शरच्चन्द्र चान्द्री मरीचीम् ।
नूलायाता स्सदसि दिदिशु स्स्वीयविद्याः कवीन्द्राः
प्रज्ञा श्चे ह्यविवतरणगुणां सन्ततं संस्तुवन्तः ॥ 35

मार्गे पश्चात् परभृतशुकाश्शारिकाश्शाखिकाय
श्छायासीनैः व्रतनियमिभि श्छात्रकैस्स्पर्धमानाः ।
तत्रायातप्रथित विदुषां काव्यशास्त्र प्रसंगान्
प्राहु स्तत्र प्रकट "वनपर्यन्त"तरे, रुन्धि यानम् ॥ 3

वाट्यां तस्याः पवन! विहरन् शिष्टसाहित्यगन्धं
किंचिज्जिघ्रन् महित 'महबूब्' पत्तनं गच्छ तूर्णम्।
तत्राचार्यं त्वभिनवयुगे वाक्चमत्कारकाव्य
श्रीस्रष्टारं नयनरहितं प्रायशो द्रक्ष्यसि त्वम् ॥ 37

भूयाद्भूयो नहि कलियुगे ब्रह्मपूजेति वाक्यं,
यत्संव्याप्तं वितथमिति तद्विद्यते दृश्यते चेत्।
जात्यन्धो वाक्पतिरय मिलापूजित स्तत्र 'बाल
ब्रह्मा' भिख्यो विविधकविता चित्रचातुर्यशक्तः ॥ 38

तस्यागारं रुचिररचितं भव्यवंश्यस्य हित्वा
किंचिद्दूरं गमनकळया मन्दमन्दं हि यात्वा।
तत्रेक्षस्व स्थिरदशादिशा च्छत्र माकल्पयन्तं
न्यग्रोधक्ष्मारुह मथ दिवाध्वान्तलोकं सृजन्तम् ॥ 39

पार्श्वोद्भूतैः स्वकरविटपै स्तालवृन्तोपचारं
तन्नीडान्तः पतगविरुतै श्चादरालापसौख्यम्।
तच्छैतल्यं दळशतचयै र्जात मायात पुंसां
तन्वान स्तद्वटतरु रहो सद्गृहीव स्थिरोऽभूत् ॥ 40

निम्ने, नाकुम्भकटवलयं कृत्तिवासो निकाशं
मध्ये व्यालावळि मिव जटा सन्तति लम्बमानाम् ।
चन्द्रं चोर्ध्वे शिरसि लसितं वीक्ष्य वृक्षं क्षपायां
ध्यानावस्था स्थितशिव मिति भ्रान्तितो नौति भक्तः ॥ 41

मोक्षो नीव्या ममृत मधरे योगजालं च दृक्षु,
ब्रह्मानन्दः प्रमदमदव द्योषितां सुस्मितेऽपि ।
इत्यश्रान्तं तरुणरसिकै स्तत्र वात्सायनीयं
पाठ्यीभूतं मदन कदनोद्दण्ड पाण्डित्यसिद्ध्यै ॥ 42

कूजन्त स्ते प्रतिदिनमुखं सायमेवं विहंगाः
शय्यात्यागात् तदुपगमना न्नूतनोढागणानाम् ।
न्यक्कारं सत्करण वचनं चाप्नुवन्ति क्रमेण;
कार्यं त्वेकं कटुकफलदं कालभेदात् कदाचित् ॥ 43

शाखाग्राणां मृदुलपवनै र्हृष्टचित्ता युवत्यः,
तच्छायाभिः परिहृत तनू कर्मतापा युवानः ।
याम्या धेन्वाः प्रणय मधुर क्षीरपूरं पिबन्तो
गूढं गाढं रतिसुलगतं पारवश्यं च यान्ति ॥ 44

भाग्यपुरम् —

'हुस्सेन्‌सागर' सलिलमुकुरे दृश्यमानाग्रहर्म्ये
श्रेणीभागात् प्रतिफलित पौरांगनानां गणानाम् ।
नेत्रैः केशैः प्रद्रमितमदा मत्स्यशैवाल वारा
आकांक्षन्ति स्थिरमिम मधोवास माक्रान्तलज्जाः ॥ 45

आदौ 'हैदर्' प्रमुकुलवरा मंडने चंडशौर्यं
ज्वालाजाले बहुरिपुवना न्युग्ररूपाण्यधाक्षुः ।
अगाराणां खनिततिमधो भूमिगर्भे सृजन्तः;
तस्मात् स्तुत्यं किमु नहि पुरा भाग्यपुर्याश्चरित्रम् ॥ 46

'ताडूर्' वैश्यः स्थपति तिलकं लक्ष्मणाख्य स्समग्रै
सर्वान्ध्रानां प्रियमभिनवं रूपधेयं दधानम् ।
लेखा यन्त्रं स्वमतिमहसा योऽसृजत्, तं नुहि त्वं;
अग्रे पूज्यः परम ऋषिवत्, सर्वदा 'भद्र' शिल्पी ॥ 47

संदृश्यन्ते पुरि विचरता तच्चलच्चित्र भूम्याः,
प्रोत्था स्तारा स्तरुण 'जमुना' 'भानुम'त्यादि नार्यः ।
याभि र्नृत्यत् प्रमुखनटका 'एन्. टि. आ' 'रक्किनेन्या'
धम्म प्रज्ञाश्च; नटन कळा भारती नूपुराभाः ॥ 48

नेपथ्येऽस्मिन् स्थित 'परभृता' 'घंटशाला' 'स्सुशीला'
'जानक्या'द्याश्च, मधुर गळै रालपंत्योऽथ रागान् ।
ग्राऽगश्चापि द्रवगसुमुखान् , जंगमान् , स्थाणुकल्पान्
कुर्वंति स्नाकू, किमु न विकृतं गानकृत्या, प्रकृत्याम् ! । 49

'भुवनविजयो' नवीनः —

'पम्पा'तीरे विजयनगरे कृष्णरायस्य काले,
याऽभूदंच'भुवनविजय' प्रख्यगोष्ठी कवीनाम् ।
'मूसी'तीरे द्रविणनगरे 'कृष्णरायेन्द्र' भाषा
वार्त्यां तादृक्कविगण महासंसदं पश्य, नव्याम् ॥ 50

सेवायोगे नियतहृदय स्तत्त्वविद्यारहस्य
प्राज्ञोत्तंसः कवनकरणे पोषणे तुल्यशक्तः ।
'अप्पाराय' स्स ललितकळामंत्रिवर्य स्सभायाः
प्रारम्भार्थं प्रवचनचयं युक्तमग्रे करोतु ॥ 51

तस्या मस्ति प्रकट'कवि सम्राण्म'ह्वांक प्रसिद्धो
ह्यग्रस्तुत्यो विविध कविता विश्वनाथः कृतार्थः ।
उच्चैस्स्वांच दृशशतफणा माळया छत्रितस्सन्
विश्रुत्यब्दो स सुखशयित 'स्सत्यनारायणा'ख्यः ॥ 52

यो रामार्चाविधिविरचने त्यक्तनिद्राशन स्सन् ,
प्राञ्जिद्रूकप्स्तुतिभि रटितस्सन् स्ववर्षं सहर्षम् ।
भाषायोषा चरणनिकटे बर्हिवद्भात्रपिंछ
श्रीभि र्नृत्यन् विलसति कळालक्ष्मणो 'लक्ष्मण'स्सः ॥ 53

वीक्षेथा, 'दाशरथि' 'करुणश्री' 'हितश्री' 'मधुश्री,'
'श्रीश्री' 'नारायण' मुखकवीन् "माधवा"भिख्य मुख्यान् ।
'ब्राह्मीपुत्रा' न्विविध कवितागानकार्यक्रमांशै
रानंदाश्रू ण्यभिगतरसावेशतो मुंचतोऽस्ये ॥ 54

तत्राऽऽस्थाने तदनुविरते शारदादिव्यमूर्ते
र्मंजीराणां कनकरुचिभिः प्रावृते पादपीठे ।
वंदारूणां सकलविदुषा मानते शीर्षदेशे,
पाणेस्तस्या स्सपदि भविता साक्षताशीः प्रवर्षम् ॥ 55

तदृहश्यात् त्वं परवशतया 'धर्म'वृद्धं मनाग्वान् ,
तद्गुम्फानां रजतकुहरे मा विलंबं कुरुष्व ।
नोचे देत चिबुकघटितग्रंथिना बंधित स्स्याः,
दूरोदग्दिक्पथजिगमिषो स्ते भवे दाद्यविघ्नः ; ।
[यद्वद्वोक्तुः प्रथमकबळे मक्षिकापातखेदः ॥ ] 56

प्रज्ञाढ्यानां वितरण वतां दूरदृग् शोभितानां
भूयास्सेवां च भुवि महती मांध्र भूनायकानाम् ।
'ब्रह्मानंद' प्रमुख सचिवैः प्राप्त राष्ट्राभिवृद्धिं
चाद्रौ लेख्यां भरत चरित्रे स्वर्ण पूर्णाक्षरेषु ॥ 57

अग्रे यस्मिन् पथि विहरसे प्रायशोऽस्मिन् स्थितास्ते
नीराधारा अहनि तु; सुरागार वाराश्च रात्रौ; ।
तद्बंधान् मावह. किमितिचे दंध्र सीम्नः प्रजास्ताः
मिथ्याचारा इति भुवि सदा श्रोत्रराहा वदेयुः ॥ 58

यात्वा दग्दिह्विषयविसरं यच्छ तत्तत् प्रजाभ्यो
भव्यामोदं ननु निरुपमं सर्वदा सेवनीयम् ।
मत् लैलिंग्य प्रकट चरितं श्रावयित्वा परेभ्यो
वंशी शाखा धमनि मुखर स्त्वन्मधुरैव रावैः ॥ 59

तिर्थ ग्वक्रं भवतु च तव प्राप्य माशीत शैलं
वर्त्मेदं भो स्तदपि विमुखो मास्म भूरूर्ध्वचारिन् ।
क्लेशो न स्यात्खलु तव सदागत्यभिख्यस्य, नाना
दिग्क्षेत्रेषु प्रसरति न किं, निम्नगाऽर्णोधि गम्या ? ॥ 60

अस्तु प्राय स्सकल सहजो भव्य भावो मरुत्! ते,
सर्वाराध्यं भरतजननो दिव्यरूपं दिदृक्षोः ।
कस्मिंश्चित् प्रावकुधरकुहरे शिखर मालोकितुं वा
तत्रात्रस्थ प्रकट महतां सन्निधानेऽटितुं वा ॥ 61

ईदृग् दीर्घीकृत विहरणात् ते यियासोः प्रयासः,
संदेशश्री वहन समये चोद्भवेतां विलंबः ।
तत्रापि स्यात् समुचित फलं नौ मनस्तृप्ति रूपं;
प्राज्ञ श्चैवं जगति कुरुते मित्रकार्यं स्वकार्यम् ॥ 62

तत्रात्र स्यु स्समधिक जगद्देशिक स्थानदम्भाः,
पीठाचार्या स्सकल जनता वित्तदास्याभिषक्ताः ।
स्वर्णस्नानै स्स्वजनभजनै श्चोत्सवै र्मुह्यमानाः;
कुत्र ब्रह्मप्रवणहृदयं कुत्र मायाढ्यवृत्तम्! ॥ 63

यावन्मन्दं त्वमिह पवसे! क्षेत्रकोट्या ममुष्यां,
सा सस्यश्री र्नमितशिरसा प्राभृतं पांशुराशेः ।
तावत् दत्वा रचयति हरिद्रासा यानसंज्ञां;
श्वेतच्छत्रे भवति विवृते प्रोद्धुय द्वंस पक्षैः ॥ 64

महाराष्ट्रम् —

अध्वग्लानि र्भवतु बहुला गच्छतस्ते प्रतीचीं
भूमीभ्राणां पथिषु विपुलव्याप्त नानाटवीषु ।
तस्मान्मुन्षीं गृहिण मनघं किंचिदाश्रित्य तिष्ठे
बॉम्बे 'विद्याभवन' सुखद च्छायया ऽकर्षित स्त्वम् ॥ 65

नैष्कुल्यात्मा कुलपतिरपि श्रीमहात्मोपदेशैः;
स्ववांग्व्याप्त्यै, प्रकट शपथो नैकवाञ्मंडितोऽपि, ।
प्राच्यज्ञाने प्रवण धिषणः पश्चिमाशाटितोऽपि;
श्रीम 'न्मुन्षीः' प्रणमित मुनि र्भाति पुंभाववाणी ॥ 66

येऽन्तश्चक्षुः प्रविशद 'जगद् ब्रह्म' तत्वे विशिष्टा
द्वैते द्वैते प्रथम भणितेऽद्वैतवादे निरूप्य ।
प्रागाचार्या स्त्रिमत गुरवो भाष्यकाराश्च रेजुः
पीठां स्तेषां समरसहृदा त्वं नमे स्तत्र तत्र ॥ 67

संश्रूयन्ते निगमशिरसा 'मात्मवत्सर्वभूता'
न्येवं वाक्यान्यमित समता द्योतकानि क्रियायाम् ।
संदृश्यन्ते पुरिपुरि निवासान्नपानेषु, दूरी
भूताः केचि त्कठिनविधिना धिक्कृता श्चाम्रवर्गैः ॥ 68

घोरं घोरं कठिन कठिनं सांधिकौद्धत्यरूपं
क्रूरं क्रूरं विष विकिरणं वर्णवर्णांतरेषु ।
इत्याक्रोश द्दलितजनता क्रांतिवादं श्रुणु त्वं
प्रा"गंबेद्कर्" मुखमुखरितं भीषणं सिंहनादम् ।। 69

तत्रात्र त्वं प्रबलविरदा पीड्यमानान् बुभुक्षून्
पात्रोच्छिष्टं मलिनकबळं प्राश्नत स्तान् दरिद्रान् ।
कंथाच्छन्नान् कतिपयजनान् स्पर्धमानान् श्ववृन्दैः ,
संवीक्षेथाः; समधिकतरं तत्क्षुधाग्नि न, वायाः ॥ 70

वीथीपार्श्वे स्वगृहरहिता, भिक्षुका गर्भदीनाः;
ये ये संति क्षुभितहृदया, ध्वान्तशाटीं च वृत्वा
रात्रौ बाष्पप्लुतनिजदृशौ शेरतेमीलयित्वा ;
स्वल्पं तेषां कुरु समुचितं सुप्तिदं, स्पर्शसौख्यम् ॥ 71

केषा मस्ति प्रबलकृपया, प्लावितं चार्द्रचित्तं ?
केषा मक्ष्ण स्स्रवति कणिका दुःखबाष्पस्य चैका ?
सर्वे प्रायः स्वसुखभवनान्येव निर्मातुकामाः
किं त्वश्रान्तं धनविरहित श्रेयसे, वाग्मिनस्ते ।। 72

नैकोऽप्येनं समुपकुरुते चान्नवस्त्र व्यपेतं;
छाया शून्यं बत ; स भजते कर्कशप्रस्थराणाम् ।
मूकाकारं, "हर" मिति मनोज्ञांबराहारहारैः ;
आवीभूतं मनुजहृदयं आवभूजाकलापात् ॥ 73

संघे साम्यं नहि नृणा मक्षरास्यत्वसिद्धिः ;
दारिद्र्यघ्नो नवसमुदयो, नास्ति ; शुल्कार्तिनाशः ।
प्रायो नास्ति; प्रळयविहरद्भूमव याति रात्रिः ,
हंतेदानी मिति, च, वितता श्रूयते किंवदंती ॥ 74

किंतु ग्रामाभ्युदयकर पंचायतीराज्यशाखां,
सौकर्यार्थं हरिगिरिनृणां संघसंक्षेमशाखाम् ।
संसृज्य द्वे प्रगतिविलस त्पंचवर्ष प्रणाळ्या,
गान्धीराज्यं, भुवि रचयितुं दीक्षितं नः प्रभुत्वम् ॥ 75

हिंदूस्थान् क ! क ! पर'केनडा' कीदृगन्योन्यमैत्री
ग्रंथीभूता ! कथमुपगता नूत्नसंकेततंत्रा !
"ट्रांबे"प्रान्ते तटिदणुपरिच्छिहत् बृहद्यंत्रशाला !
मा चुंबनां न खलु वनिता साऽप्सरा एव नाम्ना;
नोचे त्काय स्तव विदळति द्राग् सहस्राणुचूर्णम् ॥ 76

अजंतागुहाः —

त त्पश्चात्त्वं नियमितपथेनाप्रयानं प्रकुर्वन् ,
घोरारण्ये द्रुमचयसुमै स्त्पसांगत्य माप्त्वा ।
व्याघ्रीस्रोतो विपुललहरीडोलिका मालिकासु ,
क्रीडन्, स्वप्त्या, निकटशिखरीट् शीर्षरूपे ह्यरूपे ॥ 77

तत्रैवाघः स्थलविचरतां, वन्यजंतूत्कराणां
घोराराव प्रतिरवभया द्रुद्रता माप्नुहि त्वम् ।
ननापर्णै स्सुरभिकुसुमै स्स्तीर्णशय्यां च लब्ध्वा ;
तत्रागच्छ द्विविधजलमुग्मांकवाळीं च वृत्वा ॥ 78

मार्गायासं सकल मुषसि द्रा गिवहा यात्र भूयो·
नद्यां स्नात्वा, विमलवपुषा, स्वच्छभक्ति प्रवृत्त्या ।
पूर्वस्मिन् य स्तव सुतजनु संकटाद्रि विभेद,
स्वं देवं तं स्मर! नतहृदा, विश्वकर्माण माद्यम् ॥ 79

एवं नत्वा तदचलगुहामालिकाळीं प्रयाया·
यत्र ध्वान्तं हृदयभयदं नैजकान्त्यावदाय ।
अचार्याणां परिहृतयशःकांक्षिणां, पाणिपद्म
स्थापत्यश्री स्स्वचरणझण न्नूपुरैस्सा ननाट ॥ 80

तच्छैलेभ्यो मुदितमनसा त्वं पुन र्लंघयित्वा
भू 'येल्लोरा' कुहरनिहितं बौद्धजैनार्यशिल्पम् ।
दृश्यं पश्ये रुचिर रचितं सर्व संदेश पूतं
चक्षुर्बोधं हृदयसुभग चात्मसौंदर्ययोगम् ॥ 81

वार्धा: तत्युग पुरुष: —

स्वेनज्योत्स्नाप्रहृशयशसा दीप्तमध्यप्रदेशं,
हिंदीभाषापृथुलसरितो दक्षिणाशातटाग्रम् ।
'चाचा' रावप्रतिरवनयै स्संततं प्रीतिपात्रं ,
वार्धास्थानं तदनु पुरतः प्रेक्षणीयं विभाति ॥ 82

योऽतस्तीव्रप्रचुरतपसा तापयन् दिग्दिगंतान् ,
सत्याहिंसाव्रत मुपदिशन् भारतीयप्रजाभ्य: ।
गीतादिष्टे विमलिनपथे संचरन् निष्ठयाऽस्मिन्
सेवाग्रामेऽवस दुपनिषद्भावगंगावगाढो ॥ 83

योऽर्वाचीनो मुनिकुलपति स्साम्यपत्यैकदृष्टि:
स्वातंत्र्याय प्रकटितरणे पूरिताध्यात्मशंख: ।
त्रस्तोदग्र "ब्रिटिषु" मृगराट् स्वीयहस्तात्पदं द्रा
च्छत्रौ मित्रे सममतियुत स्सर्वधर्मापगाब्धि: ॥ 84

स्वल्पे धाम्नि स्वक निवसथे स्वल्पतल्पे शयित्वा
स्वल्पान्नं यश्चणकपयसी स्वल्पपात्रे गृहीत्वा ।
स्वल्पं वस्त्रं कटितलगतं स्वल्पमाजानु धृत्वा ;
स्वल्पे काले भरतजनताऽस्वल्पबन्धं त्वभैत्सीत् । 85

यद्भ्रूभंगा दभव दगिरा ड़गर्वतालद्रु भंगः
यत्सान्निध्या द्बहुबुधवरास्तेऽभवन् बालशिष्याः ।
यत्सांगत्या त्कुटिलमतय स्तेऽचरन् साधुभूताः
यद्वाक्सेका त्समजनि भुव स्तापशांति नितान्ता ॥ 86

यत्कांक्षाया स्सकल भुवने शांत्यहिंसानुसृष्टिः
यद्दीक्षाया दिशि दिशि कला पूर्णकल्याणवृष्टिः ।
यच्छिक्षाया स्सकलजनता साम्यसौभ्रात्रदृष्टि
श्चाविर्भूता बहुयुगगलैः कीर्तनीयाश्च नव्याः ॥ 87

श्रीकृष्णस्य प्रभवभवने यस्य वासो गरिष्ठः
यस्यांहश्छि न्निरशनविधौ ध्येयधर्मो महिष्ठः
दीना स्पृश्याभ्युदयघटने यस्य यत्नो घनिष्ठः
य द्वृद्वाक्ये मृदुलकठिने पद्मदंभोळितुल्ये ॥ 88

सन्मार्गस्थ स्म ऋत ममृतस्यन्दको ह्लादकारे
हासज्योत्स्नारुचिविलसितः प्राच्यवडातार: ।
दारिद्र्यांध्यक्षयकरकरः 'पुत्तली' गर्भकन्धौ
गांधी चन्द्रोऽभव दुरुकळापुष्कळो निष्कळकः ॥ 89

हेमज्योतिष्किकरदपघन श्वेतवर्णांचितस्सन्
नित्यं पूर्णो, गतफणि भय, श्शून्य मार्गे नचारी ।
निष्कामश्री र्न घनपिहितो यस्सुधांशोर्गरीयान्
निष्पक्षोऽयं न खलुमृगवल्लक्षणाढ्यो महात्मा ॥ 90

देवे भक्ति र्न खलु मलिना कर्मकांडक्रियाभिः
सत्यासक्ति र्न च परिमिता वैदिकासु प्रसगैः ।
सेवाशक्ति र्न कुलमतदृग्दूषिता, वंचिता, ता
श्चैकीभूतास्त्रिगुणसरितस्तस्य चित्तप्रयागे ॥ 91

'मूर्तौ स्वस्यां स किमु विविधाः पंचभूतस्थ भूती
श्चाऽऽधात्! नोचेत् व्यभजत परा मात्मभूर्तिहि तेषु ! ।
किंतत् क्षान्तेः प्रचुर विभवात् क्ष्मा समस्ता क्षमाऽऽसीत्!
किं त त्स्पर्शात् घनरस मभू त्पावनं चामृतंच ! ॥ 92

किं तद्दीव्यद्भुग शुचितया वह्नि रामोश्छुचित्वं ?
तत्संचारात् त्वमभिगतवान् किं सदागत्यभिख्याम् ?।
किं तच्चेत स्सुविपुलतया खं त्वनन्तत्वमापत् ?
सम्मान्येदृग् प्रकृतिपुरुषान्योऽन्यतेजो जिघृक्षा" । 93

'हा! तस्योक्ति हॅरि सुमुरळी वा प्रजाश्चाभ्यकर्षत् ;
तत्पाण्यब्जं सुकृत सुकृत श्रीमरन्दं त्ववर्षत् ;।
पूर्वे काले कुत उद्भवत् तादृशः पूर्णरूपः ?'
इत्यश्रान्तं सकल कवय स्तन्मह स्तर्कयन्ते ॥ 94

तत्कुग्रामे तदनु विहरं स्तत्कुटीद्वार माप्त्वा
रिक्तीभूते विकृतनिळये त्वं प्रविश्यान्तराळम् ।
तस्यां भित्त्यामुपरि रचितान्यांग्ल वाक्यानि 'बी ब्रीफ.'
'बी क्विक्.' 'बी गान्,' इति सविनयं पश्य तस्य प्रियाणि॥

नागपुरम् —

"गच्छेयं, नो प्रबलरिपव स्सन्तु तन्नागपुर्यां
नाऽभू दुर्व्यां तदुरगकुलं हन्तु मेकोऽपि शौण्डः"।
इत्यन्तर्भी क्षुभित हृदयो मा भव! द्वन्द्वशीलो
लोक स्तस्मा द्गजकुलमपि स्यात्तव स्वागताय ॥ 96

ईशान्याशा नियतगमने त्वं नदीं 'नर्मदा'ख्यां
लिंगाकार स्फटिककलितां सान्द्र जम्बाल युक्ताम् ।
हस्तीभूत स्वमृदुलहरी सेविताम्बोधिनाथां
गत्वा तृष्णा शमनविधये तत्पिब स्वादुनीरम् ॥ 97

पुंजीभूत स्वबल विभवस्सन् प्रयाणस्य काले
विन्ध्याद्रीणां विविध शिखरि श्रेणिका वेदिकासु ।
चित्तानन्दं समनुभवितुं संस्थितैः पक्षिवृन्दैः,
सख्यं कुर्वन् विचर पुरत; स्सद्विजाः क्षेमकाराः ॥ 98

ओरिस्सा—

प्रद्युम्नाख्यप्रियनृपतिना स्थापितं विष्णुदेवं
नित्यं नंतुं समुपगतवान् पूर्वरत्नाकरोऽयम् ।
स्वस्तीर्णोर्मिव्रजकरतलै रस्य दार्वंघ्रिपीठे
वारं वारं क्षिपति निजवा मुक्तमुक्ताफलानि ॥ 99

कोणार्के प्राक् स्थपति रचिते कांचनस्यंदनेऽर्चि
श्श्रीभि स्साक्षात्कृत दिनपतिं गातु मग्रे प्रग्रे 'पिं, ।
लक्ष्मीकांत' स्थविर विदुषो गह्वरा दुद्गतायां,
सम्य, ग्स्नाया स्सुकृतिकृतिनो भाव 'तेजोलहर्याम्' ॥ 100

वंगः —

प्रादुर्भूतान्यभिनव 'भिलाय्' 'दुर्गापूर्' 'रूर्केला,' नां
कर्मागारा ण्युचित सुखदान्यादि मूर्तित्रयाणाम् ।
रूपाण्येवं य दधिघटनायान्यदेशीय नव्य
प्रज्ञासंप द्बहुळविभवौ प्रापितौ च प्रयुक्तौ ॥ 101

ऋग्वेदस्था स्सुरुचिरऋचो यस्य कंठस्य हाराः
लोहा स्सर्वे मृदुलमृदुला मृत्समा यस्य हस्ते ।
कर्मज्ञाने परमशुभदे यस्य हृच्छ्वासकोशौ
भूया च्छिल्पप्रवणजगता, सोऽर्चित स्सानगर्विः ॥ 102

'काळीघट्टं' प्रथितचरितं पश्य वंगांगभूषं
यत्रांबायाः कुपितभयदश्यामरूपेण सर्वे ।
यात्रायाता बहु भवकृतादंहसो, द्राङ्निवृत्ताः;
श्री'जाब्चार्नाक्' वणिजतिलको निर्ममौ यत्र वप्रम् ॥ 103

काराकारे स्वजनवलये ग्रामधाम्नामभाग्या
विश्वस्ताः प्रत्यहमनुपदं संति संतापतप्ताः ।
तच्छत्राभा न्विधुर विबुधान् संस्क्रिया धैर्य धुर्यान्
आशासीथा स्तवपथि पुनर्धर्म्ये दांपत्यकामान् ॥ 104

तत्त्वाकाशे विहगणचणो ब्रह्मभावाद्रिशृंगे
ऽभ्यो नानानिगमशिरसां सूक्ष्मभावांबुरूपः ।
काळीतेजो, घनपरमहंसोऽद्भुतां रामकृष्णो
बोधासारश्रिय मिह ददन् नव्य गंगां ससर्ज ॥ 105

पायं पायं प्रसृत ममृतं, भूरिपूरं तदीयं,
विद्यारण्य भ्रमणनिपुणो वक्तृसिंहो नरेन्द्रः ।
प्राच्याप्राच्यप्रमुखपुरतो धर्मगर्जा मकार्षीत्;
सर्वाशासु प्रतिनिनदितां कल्पकल्पान्तचिन्त्याम् ॥ 106

त 'ड्रोल्पुर्या' स्तरुषु, बहुषु श्लिष्टवल्लीतनूषु
प्रोत्थ स्फारप्रसवततिषु, व्याप्तगंधान् गृहीत्वा ।
'नोबेल्'- वित्ता त्समधिकतरं स्वर्णवर्षं हि कुर्याः
टागूर्मूर्ते रजतचिबुके, केन नाच्यः कवींद्रः ॥ 107

विहारः —

जेंषेड्पुर्या बहिरुपगते चैतदेकांत देशे
ताता धात्रा प्रथमरचिता ह्यायसी कर्मशाला ।
मार्गश्रांतं समुपचरितुं त्वां समुत्साहशीला
धूमच्छत्रं वहति वियति स्तम्भदंडावलम्बम् ॥ 108

द्योमार्गे संचरणसमये प्रायशः प्राकृतश्री
स्सम्पन्न स्ते प्रचकितदृशा दृश्यते सांध्यरागः ।
पूर्वे काले श्रुतिमतयुते दुर्विदग्धप्रबुद्धैः
दृग्धा ब्रौद्ध त्रिपिटकमुखा दुस्थिताग्रे स्सगोत्रः 109

सिद्धार्थः कः प्रकटचरितो गौतमः को ऽवतारः ?
तत्प्राग्वृत्तं किमिति हृदये शंकया संकुल स्स्याः ।
जिज्ञासा स्ते श्रवण मथवा स्या द्दयाबोधि वृक्ष
च्छायापीठ्यां श्रमण यमिन श्श्रीघनश्रीकथायाः ॥ 110

सर्वज्ञोऽयं स खलु भगवान् ; तं जिनश्चेति नत्वा
निर्वाणश्री फलदमतवा ग्वल्लिकां वर्धमानाम् ।
कृन्त्वा नानाशकलविकलां दूरधूतां च कृत्वा
जन्मस्थाने बत ! निहतवान् जृंभितं श्श्रौतखड्गः ॥ 111

उत्तर प्रदेशः —

प्रान्ते तस्मिन् प्रचुरशुभदे सारनाथप्रदेशे
मौर्याशोकप्रभुवरकृत स्स्तंभराज श्चकास्ति ।
यच्छीर्षाग्रे त्रिहरिकलिते चक्ररूपे विभाति
स्थापत्यं, तत्त्रिभुवनमनोज्ञं सदा दर्शनीयम् ॥ 112

तं वन्दस्व प्रणमितहृदा यो महर्षिः कळादः
सौंदर्यश्रीव्रतयुतमति र्योगसिद्धो 'वरिंचिः ।
एवं चक्रे सुगतचलितं धर्मचक्रं नवीनं ;
तद्धर्यक्षे रसतत मथवा ऽरक्षितं रक्षितं वा ॥ 113

पश्चात्काले प्रकृतिविधिना बौद्धचन्द्रप्रकाशं
क्षीणीभूतं विगतविभवं वीक्षमाणो ध्वजो ऽयम् ।
मूकीभूतः, किमिति वदति ? स्व'यरूपप्रदाता
कोवा, कीदृक्, कठिनतपसा स्वं द्रढिष्ठं ततक्ष ॥ 114

एतद्रूपप्रतिकृति मिमां राज्यभद्रप्रपत्त्यै
मुद्राचिह्नं सपदि कृतवान् स्वाधिकाराय नेहूः ।
स्वातन्त्र्यार्कच्छविसमुदये प्राभवश्री पवित्रे
कस्याभीष्टा भवति न कळा, वा ? सती हक्कळावा ? 115

उग्रग्रावप्रकर मखिलं पत्रतुल्यं गृहीत्वा,
शातां वासीं निकटनिहितां लेखिनीद्रं च कृत्वा ।
आचार्यास्ते भुवि भगवत श्चित्रकाव्यं महिष्ठं
चक्षुर्बोधं सकलविदुषां पामराणां च लिख्युः ॥ 116

देशे सर्वा लघुलघुशिला सेतुशैलान्तरस्था,
शिल्पीन्द्राणां निगमविदुषां प्राक्कलायाजकानाम् ।
पाणिस्पर्शा दभव दमरस्फार सौंदर्यमूर्तिः ;
ध्यानाद्यस्या पशुसमधियः प्राप्नुवन्ति स्वमोक्षम् 117

यस्यान्तर्हृत् , स्वपरमतयो स्सार मास्वाद्य रेमे ,
यस्यान्तर्हृक्, प्रकृतिरचिताच्छादनं चिच्छिदेऽरम् ।
यस्यान्तर्वाग्, स्थितिमुपनिषल्लक्षितामाचचक्षे ;
ज्ञात्वा तस्याऽपकटचरितं तं भजात्यन्तपूतम् ॥ 118

वायो ! भूयो दिविजसरित श्शीकरास्तोकमुक्ता
मालां धृत्वा भवभयहरं विश्वनाथं स्तुवानः ।
काशीं गत्वा विनुहिच पुन र्विश्वविद्यालयं तं
सर्वज्ञ श्रीशिर मिव सदा सत्कळापूर्णयुक्तम् ॥ 119

ताः प्रत्यक्षा स्सतत मपरं वृन्त्रिकानां बहूनां
तत्रायात प्रमुखविदुषां सन्ति गीर्वाणवाणी ।
चैवं प्राक् सांस्कृतिक विभवश्रीश्च, भव्यान्नपूर्णा
देवी चास्यां स्वचिरसुकृते र्हेतुना वारणास्याम् ॥ 120

तद्गंगाया स्सुरुचिरतटे वाजिमेघाख्य यज्ञेऽ
गण्य स्वर्णद्रवणरुचिभि र्लिप्तदेवालयं त्वम्।
गत्वा घंटावळि मनुनुदन् चामरत्वं च लब्ध्वा
जिघ्र रारा द्बहुपरिमळं नित्यनीराजनानाम् ॥ 121

स्वैकात्म्येन प्रथित चतुरास्यागम ज्ञान माप्त्वा,
जिह्वाग्रे वाक्कमलनयनां स्वे प्रतिष्ठाप्य सत्यं।
लोकेऽस्तोके सकल विबुध ज्येष्ठपीठेऽर्चितं श्री-
ताताचार्यं नुहि सुरगिरा भासुरं ब्रह्मशोभम् ॥ 122

हिंदीभाषाकवनभुवने ऽग्रेऽभिहृश्य: "सुमित्रा
नन्दाख्य:" "पन्त्." सहि "युगपथ" स्वर्णधूळ्यादिकर्ता।
स्निग्धऽकुद्ध प्रकृतिसरसि स्वीय भावानुरूप
च्छायादर्शी, तमिहि घटित 'ग्रन्थि' "वीणानु" भूत्या ॥

मेघामोघ स्खलितसलिलै: पूर्णकुम्भा: सदम्भा:
सन्तु प्राय स्सपदिविलयं यान्तु नाचेत् विदीर्णा:।
नाऽस्ते नष्टा मृदिति 'सुमना' भावनायां रहस्यं
वित्त्वा तत्त्वं विहर पुरतो "मृत्तिकात्मोपदेशात्" 124

गन्तव्यमार्गः

साक्षाद्भूता भवतु रुचिरा प्राज्ञचित्तस्य तेऽग्रे
श्रीमत् 'बच्चन्' सुकविमणिना सिद्धसाहित्यरथ्या ।
यात्रा यस्यां प्रगतिफलदा पार्थिवानन्दपूर्णा
मत् कार्यार्थं तदपि 'मधुशालान्तरं' तस्य मार्गाः ॥ 125

दिल्ली:

'इन्द्रप्रस्थ' प्रथमनगरीं, गच्छ वायो! पुराणीं
अंके यस्या मकुटमहिता स्सार्वभौमा श्चरित्वा ।
नानाभोगे ष्वखिलविषये ष्वात्म राज्येन्दिराणां,
अन्त्येऽवार्यं प्रकृतिविधिना प्राप्तवन्त स्स्वमृत्युम् ॥ 126

तत् प्रांतोर्वी जरठजठरः प्राक् द्विषत्पार्थिवानां
नानासेना व्रणितवपुषां रक्तवर्णेन सिक्तः ।
तस्मा दन्तर्बहुळ दृषद स्ताह्गर्चिः प्रयुक्ताः;
खिन्नस्त्रीणां नयनसलिलै र्यामुनापश्च नीकाः ॥ 127

दिव्याकारः पवन ! सरितो वोचिका मुक्तकंठै
नित्यं गीतः परम पुरुषः कर्मयोगावतारः ।
स्वातन्त्र्यश्री शिवशककरो यो हतस्तन्नगर्यां,
तस्मै स्तोत्रप्रसव कलितां वाक्स्रजंचार्पयैवम् ॥ 128

"महीपरिव्याप्तमहान्धकारं
विदार्य चात्मीयवचःप्रभाभिः ।
गृहीतधर्मोद्धरणावतारं
समाप्य यातोऽसि हठान्महात्मन् ॥" 129

"कुलव्यवस्थाकुलमघरूप
मतप्रभूताहितकर्मकाण्डम् ।
समीक्ष्य चैनो विनिवारणार्थं
समूचिवान्बोधन मत्यपूर्वम् ॥" 130

"सर्वप्रजानां समतां च तुल्यं
ज्ञानाधिकारं प्रतिपाद्य भव्यम् ।
संघं, नवीनं, नितरा मकार्षीः
स्वच्छान्ति धर्मौ महितौ प्रपंचे ॥" 131

"श्वसन् हसन् पिब न्नश्नन् , सत्याहिंसाविधीन् दिशन् ।
स्वराज्ययोगलाभाय, सर्वकालं च नीतवान् ॥" 132

त'त्राकबर्', प्राज्ञघक कुलज स्सार्वभौमोऽभिनूतं.
हिंदू मुस्लिम् मतहृदययो स्सख्यबन्धं प्रसृज्य ।
सर्वक्षेमं स इह कृतवान्, साहितीगानशिल्प
श्रीवल्लीनां विकसनविधे र्यो वसन्त स्समन्तः । 133

तस्यास्थाने विविध मत वागध्वनीनाः प्रसिद्धाः,
'फाजी' 'चाऽबुल्फज' लपि पुन 'स्तानसेनश्च' 'बीबल्', ।
युक्तीद्धश्च स्वमति विभवै र्भेजिरेऽग्रे यथार्काः;
येषा मीषत् स्मरण मपि, तेऽत्यर्थमोजः प्रदद्यात् ॥ 134

तत्प्रांतस्थः सतत मसृणश्चाद्भुतः प्राक् ध्वजो यो
लोहद्रव्य द्रवण घटितो बौद्धशिल्पिप्रकांडैः ।
पूर्वस्मात् स स्मरविजयिन श्शाक्यमौनीश्वरस्य,
प्रज्ञाकारो भवतु सुदृढोऽप्राकृतो निर्विकारः ॥ 135

पश्चा दभ्रंकषशिखरवत्संभराजं प्रपश्ये
मूले यस्य स्थिरविलिखितो बिश्वकर्मानुवाकः ।
पृथ्वीराजा, प्रणमितहृदा, 'घोर् महम्मद्' विजेत्रा;
यं 'कुत्बुद्दीन्' मतममतया स्वीय 'मीनार्' चकार ॥ 136

वीक्षेथा स्तं पृथुलघटितं शोणवप्र प्रशस्तं
यत् कुड्याग्रे त्रिविधरुचिभि र्भासते नः पताका
यस्मि न्नस्ति स्थिररुचिमयं पूर्व निर्माण मद्धा !
'दीवानेखास्' दिगधिपतिहृत्कैरवाह्लादकारन् ॥ 137

तस्यद्वारे चिरविरचिते शिल्पदर्पप्रगल्भे
नित्यं हृध्यं निरुपमशिवं सुन्दरं सत्य मेतत् ।
पर्ष्या भाषा लिपिविलिखितं वाक्य मेवं चकास्ति
स्वर्ग स्साक्षाद्भवति भुवि चेत् . सोऽत्र, सोऽत्रैव तथ्यम् ।

आरुह्येनं नयनरुचिर दुर्गशीर्षप्रदेशं,
दिक्कर्णेषु प्रतिनद दुरुस्वैरकंठेन वच्येः ।
गूढं योगं यमनुसरणान्नः प्रजा नाधिका स्यात् ।
'ऐ. यू. सी. डीं.', सकलसुलभं गर्भरोधं च, यस्मै,
नूनं मन्ये द्वितनयवतस्ते मनीषा समर्था ॥ 139

'न्यूढिल्ली' तां कुतुकमनसा गच्छ सौंदर्यवल्लीं,
यस्यां भातो द्विविध घटिते 'लोकसभा', राट्सभा च ।
अश्रान्तं ये भरतजननी श्वासकोशौ पटिष्ठौ.
यत्रास्तेऽद्य स्थिरहृदयवन् 'यूनियन्' मन्त्रिवर्गः ॥ 140

तत्रोद्याने 'मघल' कुलराट् कश्चितेऽद्य प्रवृद्धे
भुक्त्वा चाम्रस्फुटफलचयं कीर राजा स्तमेवम् ।
राष्ट्रेशस्य प्रतिदिनमुखं वन्दिवन्दारुवाण्या
जेगीयन्ते शुभगुणगण कृष्णनाम्नः शृणु त्वम् । 141

प्रथमकीरः

कर्पूरखंडा इव कान्ति कान्ताः
निस्स्वार्थ बुद्ध्या कृत कार्यभाराः ।
स्निग्धा न्यनल्पानि परीमळानि
तस्याष्टदिक्षु व्यकिरन् नवानि ॥ 142

द्वितीयकीरः

तत् ज्ञानयोगः प्रियभक्तियोगः
स्वकर्म योगश्च समं मिळित्वा ।
तं माननीयं सुतरा मकुर्वन्
यथा त्रिवर्णाः प्रभुकेतनं नः ॥ 143

तृतीयकीरः

'शृण्वन्तु विश्वे अमृतस्य पुत्राः'
इत्यार्ष वाचो महसाऽभ्यवर्षत् ।
यद्यत् स बोधामृत मात्मपेयं
तत्तद्दशाशा कलशेषु गोप्यम् ॥ 144

चतुर्थकीरः

देश स्सगर्वः स्वसुतेन तेन,
स स्वीयदेशेन पुन स्सगर्वः ।
यद्वत् सुधाब्धि र्जनुषा सुधांशो
र्भूय स्सुधांशुश्च सुधाब्धिनाऽग्रे ॥ 145

तथैव चतुराशाभ्यः
समायातार्ष पक्षिणाम् ।
प्रशंसागिर आकर्ण्य
तान् विग्रच्च वदे दथ ॥ 146

आकाशश्च

'द्विजत्वा' दपि, यूयं भो,
'शुकत्वा' दपि, नक्षमाः ।
तन्महिम्नोऽवधिं प्राप्तुं;
वाचा को याति तत्पदम् ? । 417

एतां श्रुत्वा विनुति मतुलां, 'जामियामिल्लिया'ऽग्र
स्थाने प्राप्त प्रथम पदवो भ्राजितं, भव्यबन्धुम् ।
गांधेयाख्य प्रवणधिषणं राष्ट्रसभाग्रासनेभ्यं,
'जाकीर् हुस्सैन्स्' शुभकृदभिदं पश्य. स्तुतुषुरोषत् ॥ 148

यो भी द्वेष व्यसन रहितो यो महामेरुधीरो
योऽतयुद्धप्रळयजलदोत्सारणे त्वत्समानो
यश्च रा. स. प्रतिनिधिसभावेदिका वक्तृ वर्यो
यः प्रावाचद्बहुळसुखदान् पंचशीलानुलापान् ॥ 149

तं विश्वाभ्रभ्रमणनिरतं, सर्वकल्याणमंत्रं
कूजंतं सत्करुणभरितं, शांतिपारावतं भो ।
नेहूम् द्रष्टुं भवसि विफल श्चेत् स्मयं मागम स्त्वं,
शाखापत्र प्रकर निबिडे देहलीये कुलाये ॥ 150

युद्धं कुर्या न्मनुज वृषभो भौतिकज्ञाननीति,
क्षेत्रे भूद्यत् प्रकृति पुरुष प्राभवैस्सर्वदाऽस्मात् ।
यत्ना त्सूतं प्रियमभिनवं वस्तुभावप्रपंच,
चेत्युक्ति, श्री जवहर' मुखा दुद्गतां श्रावय त्वम् ॥ 151

तत्रार्धं ति प्रवणहृदया रम्यवेषा युवत्यः,
स्वारामेषु प्रमदभरिता स्स्वैरत स्संचरंतु ।
किंचि न्मात्र स्वनव नयिला'नबरै श्छन्नवक्षो
भागा, स्तासां हरतु वसनं मा भवान्! कामुकस्सन् ॥ 152

काचि त्सार्थं प्रणय समये कुंजपुंजेभ्य आत्ता
नूत्नोदाळि वेकुळ गणिका मालती मारूय मल्ली: ।
कर्तुं माळां व्यतिषजतु, तद्भावभावार्थविज्ञ
स्त्वन्तां मामा व्यथय कुसुमान्युत्क्षिपन् दिक्ष्वमूनि ॥ 153

ते वर्तते रसिकजनता रात्रि केळि विलासा
स्तत्रानेक प्रमुख 'सिनिमा' नर्तकी नाट्य दृश्या: ।
तान्नोयाया: किमिह विषये स्तेफलंस्यात् ' अमूल्यो
हार: काल: क्षणमणिमय, स्तद्व्ययं मा सहेथा: ॥ 154

'अन्नं ब्रह्म' त्यतिरुचिकरं, काठपाठं जपित्वा
भोक्ता ब्रह्म त्यतिथि वहितं चान्नसूक्तं पठित्वा ।
वृत्त्या वृत्त्याक्रयधनवतां तत्वने तेऽथ जिह्वा
'ब्रह्मानन्द' परमुख रता: पाक नित्याग्निहोत्रा: ! ॥ 155

तत्रात्र श्रीविपणिविसरे सुष्ठु 'हाल्डा' प्रपक्वै
रित्याशंसे हृदि 'रसगुला' 'बर्फि' 'बादूषा' दिमिष्टै:
नाऽऽकर्ष्य स्त्वं; प्रभवति कथं तेषु तेऽल्पापि कांक्षा,
गाढाश्लेषेऽविरळ विनिपीतांजनोष्ठामृतस्य ! ॥ 156

पत्रश्रेणीगण मुपगता स्तत्र कार्यालयानां
लूतात्राता उत गृह ततौ कुंभकर्णं निरस्य ।
निद्रां याता श्चिरसुखमयाः पंचवर्षाल्पकल्पं;
मा भंगध्येषां 'व्रत', मधिकृतां क्रोधदृग्बाधित स्सन् ॥ 157

नानाभाषा निपुणधिषणं ब्रह्मचर्यव्रतस्थं,
भूदानार्थं चरितभरतं नव्यसंघस्य रूपम् ।
चित्रीकर्तुं कृतघनकृषिं श्रि विनोभां शिवाभं;
यत्नै र्दृष्ट्वा त मुपचर 'सर्वोदया' भां सिसृक्षुम् ॥ 158

राजस्थानम्—

तत्र प्राभू दसम महसा 'रत्नसिंह' स्य पुत्री
या कृष्णश्रीचरण नलिनेऽ चंजला चंचरीकी।
भूत्वा, गीत्वा मधुर मधुर प्रेमगीती र्विरेजे;
सा, 'मीरा', ते, प्रथम विधिना भावनीया समीर! ॥ 159

'करुणा वरुणालय! प्रभो!
मुरळीगान विलोल शील! भोः ।
घनकांचन किंकिणीगण
क्वणनिक्वाण निनादसृट् प्रभो!' 160

हृदयह्रद मध्यगत स्सकृत्
विषधरो विषयोग्र भुजंगमः ।
परितः प्रचरन् कुरुतेऽटनं
निजहि तं पदमर्दनतो हरे ! 161

रागद्वेष द्रुम द्वंद्वं,
वर्धितं स्वान्त मंडले !
पातय व्रज बाल ! त्वं;
जाड्यं माधव ! मा कृथाः ॥ 162

मम मानस शुद्धतले, परं
नट ! विनीलशरीर ! रमाविभो !
झण नझ्झण तामिति नृत्यतो
विरचय प्रमुदं प्रचुरां प्रभो ! 163

इति सा सततं मधुरापुरीं,
प्रणयं भाव विभाव सस्मृतौ ।
विधुतान्तर वैषयिकेषणा
हरिपद स्मरणं कृतव्यत्ययहो ! 164

गन्तव्यमार्गः

धृतमानुषवेष विभासिनो
दिविज तेज उदंचदतींद्रियाः ।
भजनीय महत्त्व मयाश्च ते
सदा शिवेतर संक्षति हेतवः ॥ 165

तद्राजस्थान् प्रकटसिकता वीथिकायातवातं,
प्रा गंसचारे गतसमवधिं, प्रायशो द्रक्ष्यसि त्वम्
विज्ञा येन समधिकरजोबंधुरं भीषणोष्णं,
तं संपृच्छे नैवरसयुतं क्षात्रपुत्रेतिवृत्तम् ॥ 166

विद्या श्वेते घन 'मबुगिरा' वेकनाथस्य पश्यत्
फालज्वाला प्रळयनटनं भीमसिंहादिखड्गैः ।
छिन्नारीणां मदभरशिरः कंदुकाभीकनाट्यं,
ये 'कर्नल् टाड्' व्यलिख दसमप्रज्ञया हूणवाण्याम् ॥ 167

उद्यद्युद्धे प्वतिविजयिनां भीकराणां, नृपाणां
म्लेच्छारीणां करतलगताः प्रोन्नता दुर्गदेशाः ।
तत्रा प्येको ऽप्यभिजनसती वाक्षसो दुर्गदेशो
नाभूत् द्विड्राड्करतलगतो यत्रपुंखानुपुंखैः ॥ 168

आकृष्टि, श्री, मधु, सुख, मयीं चाग्रगण्यां, स्वसृष्ट्यां,
कान्त, स्वर्णद्रवण, फणित, ज्यौत्निकानां विशेषैः ।
त्वष्टाऽपिंशत् प्रबलतपसा, 'पद्मिनी' पद्मिनीर्स्त्रीः
शीलं यस्याः किल दिविभुवि प्रातनो चात्मगंधान् ॥ 169

शान्तास्यानां शमगुणभृतां राजपुत्रोत्तमानां,
क्षात्रं युत्सु प्रकटित मिदं स्तोत्रपात्रं त्वजस्रम् ।
यद्व लज्जाविनयविहित श्रीमतीनां सतीनां
उद्य द्धार्ष्ट्यं प्रबलरतिषु स्मारतन्त्रांचितासु ॥ 170

तत्रास्तोकप्रसवलतिकाश्लेषतोनामितांस्तान्
दृष्ट्वा वृक्षान् निजवनतले संचरन्त्यो युवत्यो ।
वारं वारं समदमनसा भावय न्त्यात्मनाथान्,
युद्धे जेतॄ नपि निशि जिता नात्मना मन्दिरेषु ;
[मानामानौ प्रकृतिसहजौ चक्रनेमिप्रवृत्तौ ॥] 171

कोशे यस्य 'स्व' पद मथवा नास्ति; चे द्रियते, त
च्छब्दस्यार्थः 'धर' इति भवेत्, यो दिवारात्रिकालम् ।
नेत्रक्लेशक्षपणनिरत श्शंकित श्शुश्रुतर्षिः ;
तच्छ्री'मोडीम्' स्मर; तदुपमितं 'सूर्यनारायणं' च ॥ 172

गच्छोदग् दिङ्नगरतिलकां शीतलोत्ताल'सिम्लां',
यां प्राग्राजप्रतिनिधिवरो ग्रीष्मकालेऽभ्यलाषीत्।
दीर्घाब्दान्त र्विविध विधिभिः प्राप्ततापात् विमुक्त्यै
मुग्धां स्निग्धा मिव युवजन स्स्वीयकार्यालयार्तः ॥ 173

नरनारी गणानी हग्विचत्र चित्र प्रवृत्तिभिः।
वर्तमाना नपि प्रायो द्रक्ष्यसि त्वत्पथांतरे ॥ 174

'अट्टाद्ध्रक्ष्यै भेरित घटिका नः प्रदत्ते'ति भर्तृन्
प्रार्थ्य व्याजा द्भुवि निहित निश्श्रेणिका श्चापनीय।
त्यक्त्वा रूढा न्निजगृहकवाटालि माबद्ध्य, काश्चित्,
कांता यांतु प्रियचलन चित्रालयान् धूर्तवृत्ताः ॥ 175

ऊर्ध्वे नाथा अधगत मिषाः प्राप्तभक्ष्यानि तुष्ट्या
जग्ध्वा, युक्त्या भुवि समवतीर्यार्गळानंतरस्थान्।
सित्वा, गाढस्वपननटनं नर्मणा कुर्वते, तेः
गेहा द्वाह्ये प्रतिकृत विधौ बाधितासु प्रियासु ॥ 176

पंजाब् —

देशार्थं ये बहुशतजनाः प्राणवायून् व्यमुंचन्
'डय्यर्' रक्षोगळित गुळिकाग्राभिविद्धा हसन्तः।
स्वातन्त्र्यश्री प्रवण धिषणाः तन्महात्मोक्तिबद्धा;
स्तेषां निद्रा भुवि विचरतो वीरगन्धान् किर त्वम् ॥ 177

'छन्द्रोवाक्कृत्' 'सुगत' 'महमद्' देशिका ये, विभिन्ना
श्चक्रु र्मुक्ते स्सुजनसुगमा स्सूक्तिरत्नप्रतोळीः।
तत्वं तेषा मभिनवविशं ग्रन्थसाहे कृतौ स
म्मील्य श्रेजेऽऽ'मृतसर' पुरे नानगाख्यो; नमेस्तम् ॥ 178

प्रायो दृष्टो भरत कुतले केषुचित्पत्तनेषु
त्वत्सूनोश्च प्रियहनुमतो दीर्घवालेन तुल्याम्।
'क्यू' श्रेणीं संगत जनगणो 'रेषना' हार याच्ना
दीन, स्तिष्ठन् विपणि पुरतो; भा वते, 'क्षेमराज्ये!' ॥179

प्रावृट्काले रसपरवशा 'सट्लेजा' ख्यापगा. तत्
'भाक्रा' 'नंगल्' घनजलतटीयोजना कंकणांका।
'पंजाब्' देशं स्वधव मधुना सा करोति प्रसन्नं;
का वा योषा न पति सुखदा, प्राप्तनूलांग भूषा! ॥ 180

सिंधुप्रान्तः —

सिंधीवाणीं त्रिशतकृतिवा कपुष्पपत्रैः समर्च्य,
स्वीयांल्लोकत्या दिशि दिशि शतग्रन्थगन्धान् विकीर्य ।
गांधेयाध्व प्रमुखपथिको योगसिद्धोऽतिवृद्धा,
श्श्रीवास्वानी लसति, पुरत, स्तं प्रपश्ये स्वश्यम् ॥ 181

तत्र स्या त्ते स्मयदविषयः 'प्रेमचन्द्र' स्य वाचि
व्यक्तो यस्यां वृषशकटिका चोदको, रूढकाय ।
षल्लक्षस्वं, झगिति विगतज्ञप्तिनेऽदात् , यदाऽहा !
अन्ये सर्वे परधनरति व्याळ दंष्ट्रासु तुष्टाः ॥ 182

हिमाचलः —

ऊर्ध्वं याया भरत कुतल स्योत्तराशां तु; यत्र
क्ष्माभृ न्मूर्ध्नि प्रकटदवळच्छलितोच्चद्धिमानि ।
प्रायो नानामुनिजनतपो बर्हिषां दोहदानि,
प्रेक्ष्येत्थं 'शंकरकरि'वल्लप्यसे दिव्यभावान् ॥ 183

जीर्ये हिमाद्रिपलितशिरसः केशपाशो ऽथवा ? श्री
कैलासाद्रि प्रभुतनुभव च्छ्वेतकान्तिद्रवो वा ?
तज्जूटाग्रस्फुरदमृतरुक्खंडिकार्चिस्स्रवो वा ?
नृत्य त्काया द्रुळितभसितै र्व्यापिताच्छादनं वा ? 184

आदौ त्वष्ट्रा रजतरजसा रूपिता वेदिका वा ?
मल्ली शय्या, विपुलरचिता, किन्नरप्रेमिकैर्वा ?
स्नान स्त्रीभि स्त्रिदशभुवने स्तीर्णशुद्धाम्बरं वा ?
इत्याशंकाकुलित हृदयो मा भव त्वं समीर ! ॥ 185

एषा धात्री प्रकृतिबहुळ प्राणिनां प्रीणनार्थं,
नित्यं स्वोद्यद्गिरिकुचपयः पांडुडिंडीरखंडान् ।
स्वच्छोद्गारान् मधुरमधुरान् निर्झरीणां प्रवाहान् ।
पूर्णप्रेम्णा जगति सृजतीत्येव संविद्धि दृश्यम् ॥ 186

# मरुत्सन्देशः

## तृतीयभागः

भो भो स्तिष्ठ स्तिमितमनसा श्रोतुकामस्सभार्या
एकस्यां त्वं प्रचुरचरितं गीयमानं स्वमित्रैः ।
'टी· ए· रायन्' बलिविरगश्रीमयं तद्दिगन्ते;
'लाढक्' खेटे प्रकटपटकस्फेष्ठवाटीं प्रविष्टः ॥ 187

"'उत्तुंगाद्रिस्तनघनरुचा' मोहितो दुर्मदान्धो,
दुष्टाराति र्गहनकुहना व्यूह निर्वाहशौंडः ।
को वा बाहुं क्षिपति सहसा नैज मुत्थाप्य दीर्घं,
मद्भूमातु र्धवळवसनप्रावृते वक्षसीत्थम् ? 188

को वैन्धिष्ठ प्रबलदहनज्वालिकां शीतशैले ?
शान्तिस्थाने सततविजने को रिपु र्वर्ततेऽद्य ?
गान्धीदेशे सरळहृदयान् को विजेतुं बतैच्छत् ?
को वा मूढो य इह यतते क्रष्टु मेणं मृगांकात् ? 189

"कुत 'श्येना', सेना, कुटिलविधिना पापमनसा
चिरस्थं 'मेक् मोह' न्नवधि मववीर्यं प्रचलिता ?
कुतंते विद्युच्चटुलशकटै श्चायुधबलै
रलंघिष्ठः ध्वंस्या बहुविषमुखीवात्र भुजगी ? ॥ 190

इति क्रंद न्नुश्चैः क्रुधितनयनोषर्बुधकर्णै
स्त्रिलिंगक्ष्मापुत्रो युवकतिलकः कश्चन महान् ।
प्रवीर स्साटोपं पटुरिपुबलं रोद्धु मगमत्;
स्वपूर्वेषां ख्यातिं प्रकटयितुकामो दिशि दिशि ॥ 191

'बि. ए. आनर्स्' समधिककळापट्टभद्रत्व माप्तुं,
स्थित्वा ढिल्ल्यां पठनसमये प्राप्य सत्कार महम् ।
'यू. पी. यस्. सी.' घटितवरणे 'चाम्रतांबूल' माप्त्वा
डेहा ड्रू नुद्भटरणकळाशिक्षणे दीक्षितो ऽभूत् ॥ 192

भूत्वा. प्रतापप्रथमं ततोऽसौ,
नवाजि तंत्राध्ययना ददीपत् ।
चेज्जृम्भते स्वांगक माहवोक्त्या;
कथं स तिष्ठे द्रणरंगदूरः ? 193

"द्विषच्छिरः कंदुक संचये यें
चिक्रीडुराज्यां शितखड्गहस्ताः ।
प्रा'ग्वालचंद्रा'दिक बालवीराः ?
पंथान मेषां महितं ग्रहीष्ये" ॥ 194

'अशान्तवं देश मिमं करिष्ये,
संग्रामरंगे विजयं वरिष्ये ।
प्रचंडशत्रू नह माहनिष्ये;'
इति प्रतिज्ञां भयदां प्रकुर्वन् ॥ 195

वीरोऽच्युतो ऽगर्ज दुदग्रवृत्त्या
'शेला' चलालीशिखरस्थलीषु ।
संक्रुद्ध हर्यक्ष किशोरतुल्यो,
दुरीक्षणीयोऽद्भुतशौर्यधामा ॥ 196

दूरस्थ चीनारिपव स्सहस्रं,
संवीक्ष्य भीता अपि तं, 'मेषीनूगनू'
गोळै रगच्छन् पुरतो निहंतुं,
प्रकल्पयन्त स्तुहिनेऽभिकीकाः ॥ 197

हेमंत संसृष्ट हिमाश्मशैत्ये
मुहुर्द्विषन्मुक्तशतघ्निकाग्नौ ।
द्वंद्वे स्थितप्रज्ञ इवात्मशील
स्संग्रामरंगेऽचलित स्स तस्थौ ॥ 198

सेनातरंग प्रकरोऽहितानां
पुन:पुन स्संप्रवहन् तिरोऽगात् ।
अंत्ये न भेत्तुं कुशलो; दृढिष्ठं
त्रिलिंग 'वीराच्युतराय' तीरम् ॥ 199

तदा समीपेऽरिगणं विलोक्य
व्यलंघताग्रे स बुभुक्षयेव ।
प्रचंडचीनीयभटालिमध्ये,
यथा गरुत्मान् भुजगप्रताने ॥ 200

परीवृतस्सन् रिपुभिः करालै
र्विजृम्भमाण: प्रबलप्रतापात् ।
स स्मारयामास पुरा'ऽभिमन्युं'
एकोऽपि विच्छिद्य परश्शतारीन् ॥ 201

बालो ऽप्युदग्र स्स विपक्षसेना
पंचासु तंतून् त्रुटतिस्म भूयः ।
श्री'वेम'योगीन्द्रवचः कृपाणो
यथा समाजस्य कुतंत्रपाशान् ॥ 202

स गोचरागोचरचित्रयुद्धे
तुषार'मेघेषु' तिरोहितस्सन् ।
शचींद्रवरस्वायुध लाघवेन
महाबलिष्ठां 'श्विनिया' नहंश्च ॥

203

न हि व्यजाने स्तदपूर्वतन्त्रं
क्षणे क्षणे नूत्न मतो निगूढम् ।
रिपो भटा स्ते· शफरा इव स्वे
जलांतरे विस्तृत जालजालम् ॥ 204

अहो स्व 'रैफुल्' गुळिकासहस्रै
रुरांसि विद्ध्वा द्विषतां चमूनाम् ।
स, वर्णकारोत्तमवद्व्यलिपत्
छिन्नारिरक्तै र्धवळाद्रिवक्षम् ॥ 205

अयं तु कालोऽमहिषाधिरूढ
स्त्वफालनेत्रोऽपरकालकालः ।
इत्यात्तशंका उपयातु मेनं
द्विषज्जना स्तेऽभिभयु स्तदानीम् ॥ 206

तथाजिरंगे परित श्चरन्तं
शतघ्नितुंडत्रुटितारिशीर्षम् ।
वनप्रमत्तद्विरदोपमेयं
मुमूर्छयापन् रिपुसैनिकास्तम् 207

प्रोत्क्षिप्यमाने गगनप्रदेशे
द्विषद्भटानां विदळीकृतांगैः ।
स आतपत्रं त्वकरो द्विचित्रं
स्वपक्षसैन्याय सुखं विधातुम् । 208

तथैव 'नीफा' रणरंगमध्ये
स्वयुक्तिशक्ती विनियुज्य बाढम्
दिने प्यकार्षीत् प्रबलं तमिस्रं
स्वमुच्यमानै र्गुळिकाग्निधूमैः ॥ 209

तस्यास्त्रशस्त्रध्वनिभि र्विभीता
स्तदष्ट दिग्राणगरी युवत्यः ।
आशिश्लिषु स्स्व यतीं स्तदानीं;
लताः प्रकांडा निव विद्रुमाणाम् ॥ 210

हस्ते ऽस्तिचे देकसुवर्णकुम्भ
स्तारापथं संस्पृशति प्रमोदः ।
निर्यत्नलब्धेन 'सुवर्णकुम्भ'
द्वंद्वेन मोदोऽस्तु कियान् पतीनाम् ॥ 211

केनापि भावेन कथा प्रवृत्त्या
स्त्रिया प्रदत्तानि सुखानि भोक्तुम् ।
को वाऽस्ति लोके विमुखो युवा, नः
पुराणकाले ऽप्यथवा नवीने ॥ 212

तासां परिष्वंगबला त्प्रभग्नाः
स्वकंठमुक्ताफल मालिका स्ताः ।
नक्षत्ररूपै रपतन् महाभ्रे
भकल्पयंत्य स्सितकांतिगोळान् ॥ 213

शच्या प्रदत्तं वेहुळाव्य
रासीत् प्रसन्नं हृदयं मघोनः ।
तद्धार मुद्राक्षतिजातरक्तं
प्रागंबरेऽथ प्रतिबिंबितं च ॥ 214

पुलोमजायाः कुच रूपिताद्रि
व्रजस्स्वपक्षच्छिद मिंद्र मेनम् ।
तथा ऽर्दिदत् तत्परिरम्भकाले;
ह्यहो! द्विषत्ता कियती समाप्ता ! ॥ 215

व्याजेन तस्या भयवारणस्य
मुहुः प्रचुंबन् वदनं बिडौजः ।
तच्चूचुकाभ्यां प्रहतोऽपि हृष्टः;
क्लेशा दुपज्ञ स्स्वसुखं सुनोति ॥ 21[illegible]

एवं व्याप्तो दिवो भागे
स्मारंगे समन्ततः ।
जृम्भमाणे रणे भूम्यां
चित्रं दैवस्य कल्पनम् ॥ 217

तदा भारत भटः

क्षणे परस्तात् पुरतः क्षणान्तरे
दुरीक्षण स्सन् विहरन् प्रतिक्षणम् ।
क्षणप्रभाभ्रान्ति विधां प्रकल्पयन्
स तीक्ष्णतः प्रक्षणुतेस्म शात्रवान् ॥ 218

जाज्वल्यमाने निजशौर्यदीपे
तथारिनाथा श्शलभायिता स्ते
येभ्यः प्रभूतं भसितं भवाय
प्रदत्त मर्चाविधिनाऽच्युतेन ॥ 219

शंभोः स्समक्ष सहसा श्मशानं
यदा स कंकाळचयै रकार्षीत् ॥
तत्रोर्ध्वनिर्यात मृतारिजीवा
स्तदाऽप्नुवन् स्वर्गभुवं समीपम् ॥ 220

'कुत स्समायांति दिवः कवाटं
नवीनवीरा' इति शंकमाना ।
निशासु देवा अभिवीक्षितुं त
द्धिमाचलाग्रं विविशु र्विशालम् ॥ 221

वळक्षवासांसि धृतानि तेषां
हतारि देहोज्झित रक्तपूरैः ।
आशोणितानि; भ्रमिता स्स्वनार्यः
'परांगना कुंकुमितानिवे'ति ॥ 222

ताहग्रणे दुर्विधिना बताऽसौ
हठा दपप्तत् प्रतिपक्षविद्धः ।
हा ! हा ! हरेति स्मरणं प्रकुर्वन्
'शीका'द्रिभागे रविवत् प्रतीचि ॥ 223

स्व'गुरुचरणसिंह'प्रौढसेनासमुहे
प्रथमपद मुदात्तं यः पुरस्ता दवाप्नोत ।
विधुविमलिनकीर्ति चोर्ध्वलोकं स आपत्
नरसुत इव भूमौ संहतोऽन्ते पतित्वा ॥ 224

द्विमासकालं नवशिक्षणाय
प्रभुत्वहूतोऽपि पराङ्मुखस्सन् ।
स युद्धयमान स्समरे सपत्नान्
निबर्हमाणो व्यजह न्निजासून् ॥ 225

तेजःप्रधानप्रभव स्तथाऽऽजौ
मध्याह्न मार्ताण्ड इव प्रदीप्य ।
सोऽस्तं गत श्शात्रव वाहिनी प्र
वाहान् प्रतापा द्रुत ! शोषयित्वा ॥ 226

यो देशमातुः प्रियपादपीठे
स्वशक्तियुक्ती रुपदा मकार्षीत् ।
अस्ताविषु भारतनायका स्तं;
मृतिश्च भूषा किल वीरपुंसाम् ॥ 227

असौ वसार्सीत् प्रतिपक्षशूर
प्रतापवह्ने श्शमनं समस्तम् ।
स्व जीवसारोद्धुर कुम्भवृष्ट्या,
घनाघनः प्रापितदुर्दिनेषु ॥ 228

ह्विग्' 'पार्' चवद्रीः, पृतनाविपाश्च
प्राणंशिषुः प्रांजलयो नतास्याः ।
नेहुश्च खेदाविलचेतसा, प्र
शंसाप्रसूना न्यकिरत् मृतेऽस्मिन् ॥ 229

हा! दैवचित्रम् ! श्रुत मर्घरात्रा
वाकाशवाण्या"चिनयाम्र" चीनम् ।
पश्चात् प्रयातीति; परेऽह्नि भूयः
सा शांतिदेदी ददृशे प्रसन्ना ॥ 230

युक्तं स धृत्वा गहनं नवीनं,
मृतांग विश्लेषित सूक्ष्मकायम् ।
स्वाराज्यलक्ष्मीं हृतमैत् समक्षं
स्वराज्यलक्ष्मीं नितरां रिरक्षुः ॥ 231

नीहार भूमीधर तुंगश्रृंगात्
ज्योतिष्पथे वीरमृते स्वकृत्या ।
आजग्मिवांसं नगरं मघोनः
प्रौक्षन्त सर्वे चकिता निलिंपाः ॥ 232

वक्त्रे कपोले चिबुके च तस्य
वक्षःस्थले लग्न निजेक्षणानि ।
द्राग्नोपसंहर्तु मपि क्षमा स्ते
तद्वीरसौंदर्यरुचाः विचेष्टाः ॥ 233

तत्राप्सरः किन्नरसिद्धसाध्याऽ
स्वप्नावलीनां प्रियगीतिकाभिः ।
नृत्ये प्रवृत्ते सति, कल्पवृक्ष
च्छायावितर्द्यां मुदित स्स आसीत् ॥ 234

दृष्ट्वा 'तदा वीर' कुलीमे नं
मुदश्रुमुक्तामणिबद्धहारम् ।
प्रादान्महेन्द्रोऽभिनवं मनोज्ञं
प्रसिद्धदेशान्निकटागताय ॥ 235

यस्याहवारावचयै विभीता
याऽस्वंक्त पूर्वं प्रिय मापभातम् ।
इन्द्राण्यपश्य तरुणं तदा, सा
मन्दाक्षशिक्षा नमितैः कटाक्षैः ॥ 236

'मुराजिदेशाधि' महाप्रवुद्ध
प्रवर्तित स्वर्णनियंत्रणस्य ।
प्रमीत्यभावा द्भवतिस्म शीर्षे
दिवौकसां सत्कनकाभिषेकः ॥ 237

सोऽग्रे ऽत्र वाचस्पति दिक्पतीनां
आशीर्वचःपूर्वक लाजवृष्ट्याम् ।
स्वःकीर्ति कन्या करपीडनांचत्
कल्याणपीठ्यां वरवद्व्यराजत् ॥ 238

तदाऽच्युतो विस्मयतोऽमरेभ्यो
नमश्च कृत्वा पुलके शरीरे ।
स सूर्यलोकं निकषा प्रतस्थे
चिरं प्रगम्यं रणशूरपुंभिः ॥ 239

'थूर्का' 'शिख्' 'रपपुत्र;' योद्धृनिवहो मत् भारताम्बाप्रियो
वीरस्वैरविहार कार्य विधिना चैनानमू संचयान् ।
संवृत्याग्नि शिखाटवीतृण कणान् कुर्वन् भृशं भस्मसात्
प्राप्तान्ते, समलंचकार, स दिवं रोषार्चिषा भूषितः ॥ 240

"स्वधर्मे निधनं श्रेयः"
इति वाक्यं प्रमाणितम् ।
एतैरिति समश्लिक्षत्
गीता माता तदात्मजान् ॥ 241

ते संस्कृतिं प्राप्य परां सुराणां
ऊर्ध्वं प्रविष्टा विविधाग्रशूराः।
रव्यु रवे स्स्वागत तोरणानां
छायासु छाया स्मित चन्द्रिकासु ॥ 242

यथा विभूषां तनुतेऽङ्गनार्हां
सुवर्णकारः कनकं विकृत्य।
सकृत्तथात्मा स्वतनुं निहत्य
नवां तनुं स्वी कुरुतेऽर्हरूपाम् ॥ 243

एवं गीत्वा बहुश्लोकै र्वीरगाथां रसोद्धुराम्।
वाद्यतंत्रीं विहायाधो निधास्यति दळाधिपः ॥ 244

पर स्सहस्र सभ्यानां कथापीयूष पायिनाम्।
करताळरवै र्हृष्टाः तेऽन्तेऽत्यंत पिपासया ॥ 245

'चिरंजीवि' कवे श्शिष्याः 'कार्फी' 'तां' हिमशीतलाम्।
पातु मुष्णीकरिष्यन्ति स्वप्रतापोष्ण वर्ष्मणा ॥ 246

# मरुत्सन्देशः

## चतुर्थभागः

आख्यानान्ते बुधजन सभावेदिका मध्भागे
स्वोच्चैःकंठ जनगणमनः' ख्यातगीतिं च गीत्वा
ते यास्यन्ति त्रिवर्णविरुचिरां नः पताकां गृहीत्वा;
संचाल्यैना मिहि विधिसमाबद्धचेताः पुरस्तात् ॥ 247

चैनाभूत प्रथमकबलीभूतभूमिं प्रविश्य
प्राक् तत्प्रान्ते विहर निशित प्रज्ञया मत्प्रियायै ।
आसीत्पूर्वं यदि हनूमतो दौत्यकृत्यं जयान्तं
का वा शंका भवति हृदि मे तत्पितुः कौशले ते ! 248

सा· 'यन्· सी· सी·' महित महिलाशास्त्रिकायां नियुक्ता
मत्कान्ता स्या दरिगणवशे भूतले भारतीये ।
पुंवेषा वा तदचलगुहाध्वान्तगर्भे निगूढा
मानप्राण द्विविध धन संरक्षणे बद्धदीक्षा ॥ 249

त्रिशद्वर्षैः परिणत तनूवल्लिकां वैदुषीभ्यां
मातुर्वाण्यां मधुरवचसा मन्द मान्थ्रीपुरन्ध्रीम् ।
दौत्यं चक्ष्व प्रबलकृपया ता मभिज्ञाय पत्नीं,
यूते यस्या श्चिकुर चमरे दृश्यते लक्ष्मलक्ष्मीः ॥ 250

स्त्रीबिम्बोष्ठः सुकविगदितो भाव एतौ नितान्तं
नित्यं नूत्नावपममधुरा विषयजानं तथापि ।
दूरायाद्यात् क्षुभितमतये रोचते न द्वितीयोऽ
प्येवं मह्यं ज्वरित वपुषे यद्ददन्नं प्रदिष्टम् । 251

राले रङ्गस्समय नियता षड्घट्यो विधात्रा,
यामा मंशाः क्षणिकशकला श्च प्युदग्राग्निकीकाः ।
संतश्चैवं मम कृशतनुं गाढ मुत्तापयन्ति;
द्राग्घत्वा मां विचर न हि चेज्जृंभितामैऽग्नजाग्निः ॥ 252

त्वष्टे त्यूहे बत गतयुगे धीप्रमादं प्रकामं
चक्रे चक्रे नभसि तरणि मित्ररत्नं प्रतक्ष्य ।
त्यक्त्वेन्दुं तं य इह जनुषा शीतलो ऽप्युष्णरश्मि
र्भूत्वा यूनो मदनतपने विक्षिपन् मोदमानः ॥ 253

हृष्यां योषां विधिरभिसृजन् सृष्टिभूषां सुधांशौ
रन्ध्रं कृत्वा समुदितरसे नैषधोष्ठं व्यलिंपत् ।
सेव्यं पुंसा मनुदिन महो ! चेत्तदैवाऽस्वनिष्यत् ।
सोऽन्तः खातं पृथुल मधुना ग्लौः खलः प्राणशिष्यत् ॥254

शृंगारेऽस्मिन् कविकृतपुरा काव्यभावा हिमांशो
निंदालापा नहि समुचिता इत्यमन्ये; तथापि !
प्राप्ते कष्टेसति मयि तएवाद्यजाता विचाराः !
भावेष्वेवं भवतु समता, संगतैकानुभूत्या ॥ 255

पुरुषोवा नहिस्त्रीवा,
जिजीविषति भूतले ।
अन्योन्यालम्बनं हित्वा;
कुतो ज्योत्स्ना विधुं विना । 256

अद्धा ! स पुष्पधानुष्को
व्याधवत् त्वाडतेऽनिशम् ।
तनूमतो ऽतनु र्भूत्वा;
कुत स्तस्य प्रतिक्रिया ! 257

